प्रकाशन/प्रकाशक
डॉ.सुनील जाधव
नव साहित्यकार पब्लिकेशन, नांदेड–महाराष्ट्र

मुद्रण/ मुद्रक
तन्मय प्रिंटर्स,नांदेड
डॉ.सुनील जाधव,नांदेड

मेल पता shodhrityu78@yahoo.com
वेबसाइट www.shodhritu.com

''शोध–ऋतु ' तिमाही पत्रिका में आलेख लेखक निम्न बिन्दुओं पर अवश्य ध्यान दें ।
फॉण्ट–कृति देव 10 वर्ड फाइल में ही सामग्री स्वीकृत की जायेगी ।
आलेख पेज की मर्यादा चार पेज होगी ।
आलेख विशेषज्ञों द्वारा चयन किये जायेंगे ।
चयनित आलेख की सूचना मेल द्वारा आलेख लेखक को दी जायेगी ।
चयनित आलेख के लिए 1000रु प्रोसेसिंग शुल्क लिया जायेगा ।
लेखक मौलिक शोधपरक एवं वैचारिक आलेख ही भेंजे ।
व्हाट्स एप–9405384672



बैंक विवरण

| | |
|---|---|
| NAME | SUNIL GULABSING JADHAV |
| BAINK | BANK OF MAHARASHTRA, WORKSHOP CORNER, NANDED, MAHARASHTRA |
| ACCOUNT NO. | 2015 8925 290 |
| IFSC CODE | MAHB0000720 |




ACCEPTED HERE

Scan & Pay Using PhonePe App



or Pay to Mobile Number using PhonePe App

9405384672
Sunil Jadhav

# 9.मनुस्मृतौ आचार्यशिष्यसम्बन्धं वर्तमा ने तस्य उपादेयता च

*–टी.एस. श्रीशैलम*
संस्कृत, सहायक प्रोफेसर
श्री शंकर आर्ट्स एंड साइंस कॉलेज एनाथुर, कांचीपुरम तमिलनाडु

वैदिककाले गुरुशिष्यसम्बन्धः अतीव मधुर आसीत्। भारतवर्षे या गुरुकुलशिक्षाप्रणाली सा महती आनन्दकल्याणकारिणी, सर्वविद्याप्रचारिणी, सदाचारसुविचारविधायिनी, बालानां बुद्धिविकासिनी शुभाशुभप्रदर्शिनी चासीत्। अत एव शिक्षा विद्योपादायिका बभूव। वर्तमानेकाले गुरुकुल शिक्षापद्धति समाश्रित्य सुधियो विश्वहितं समाजहितञ्च चिकीर्षन्ति, लोकस्य दुःखदावाग्निं संजिहीर्षन्ति, सत्कार्यं विधित्सन्ति, दुष्कार्यं जिहीर्षन्ति आत्मानं मुमुक्षन्ते च अत एव युक्तमुक्तम्–'सा विद्या या विमुक्तये इति। एतादृशी सुशिक्षा गुरुकुलशिक्षापद्धतेः एव सम्भवति अन्यत्र कुत्रापि एता–शी भावना अद्यतन्यां शिक्षायां कुत्रापि न वरीवर्ति। अस्माकं भारतवर्ष यदि वेदादिग्रन्थाः सुरक्षिताः सन्ति तर्हि भारतीयवैदिक संस्कृतिरपि सुरक्षिता अस्ति तच्च गुरुकुल शिक्षाप्रणाल्या एवं सम्भवति। वैदिकवाङ्मये गुरुशिष्यसम्बन्धो व्यापकरूपेण ऋषिभिः प्रतिपादितः।स्मृतिग्रन्थेषु गुरुशिष्यपरम्परामाश्रित्य व्यापकरूपेण व्याख्या वर्तते। बालकस्य उपनयन संस्कारानन्तरं गुरोराज्ञायाः पालनमेव तदीयं कर्तव्यं भवति। पित्रोः आचार्यस्य च सेवा एव परमो धर्मः, यतोऽहि एतेन एव सर्वाणि तपसि संपूर्णानि भवन्ति। एषां त्रयाणां सेवा एव परमं तपः। तैत्तिरीयोपनिषदि एषां गाना देववत् वर्तते। मनुस्मृतौ उपनयनविषये प्रोक्तं यत् वर्णानुसारं बालकस्य उपनयनसंस्कारः अष्टमे एकादशे, द्वादशे वा वर्षे भवेत।' बालकः ब्रह्मचर्याश्रमे एव तपोविषये अभ्यस्यति। शिष्यः गुरोराज्ञायाः पश्चात् एव भिक्षानं गृह्णाति। तस्य जीवनं तपोमयं भवति, परञ्च अद्य छात्रस्य जीवनं सुखसुविधानुकूलं भवति।छात्रस्य उपनयनात्प्राक् गुरुः छात्रम् उपदिशति उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः। /आचारमग्निकार्यं च सन्ध्योपासनेव च ॥

**गुरुकुले छात्रव्यवहारः** –मनुस्मृतौ उल्लिखितं यत् यदा कक्षायां गुरुः उपदिशति तदा ब्रह्माञ्जलिमुद्रायां भवेत्– 'ब्रह्माञ्जलि कृतोऽध्याप्यो लघुवासा जितेन्द्रियः इति। ब्रह्माञ्जलेः तात्पर्यं वर्तते यत् छात्रः विनम्रतापूर्वक गुरुसमक्षे नमस्कारमुद्रायाम् उपविशेत्। चरणस्पर्शविषये प्रोक्तं यत् दक्षिणहस्तेन दक्षिणपादस्य एव स्पर्शो भवेत्। वामे वामस्य चा' शिष्यः पठनसमये सामान्यं स्वच्छवस्त्रं च धारयेत्। अपि च उत्तरदिशायाम् उपविश्य शास्त्रोक्तम् आचमनं कुर्यात् –अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङमुख :।/ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥ गुरुकुल शिक्षापद्धत्येव एतादृशी पद्धतिः अस्ति यत्र शिष्याः ब्रह्मवातावरणात् दूरं स्थित्वा ब्रह्मचर्य सन्धार्य विद्वांस गुरु निकषा वेदस्य, आचारस्य व्यवहारस्य च शिक्षा प्राप्नुवन्ति। संसारे केवला एषा पद्धतिरेव

एतादृशी अस्ति, यस्यामाधिदैविक आधिभौतिक–आध्यात्मिकशान्तिप्राप्तये एव विद्या दीयते। अस्यां गुरुकुलशिक्षापद्धत्यामेव ब्रह्मचारी शारीरिक आत्मिक–सामाजिकोन्नतिं कर्तुं समर्थो भवति। गुरुकुलीये वातावरणे अधीतो ब्रह्मचारी एवं स्वावलम्बी, विनम्र, नतः, सभ्यः सुनागरिक, देशभक्त, सर्वसुधारक, समाजसेवी, धर्मधारकः, परोपकारपारायण, गुरुभक्त, सर्वहितसम्पादकश्च भवितुमर्हति। स्वामिविवेकानन्देनापि सुशिक्षासम्बन्धे युक्तमुक्तम् "Education is the manifestation of divine perfection existing in men. We want that education by which character is formed, strength of mind increased, the intellect is expanded and by which one can stand on one's own feet"

**आचार्यपरिभाषा** –यः ब्राह्मणः स्वशिष्यस्य उपनयनसंस्कारं करोति कल्पसूत्रोपनिषद्वेदादीनां ज्ञानम् उपदिशति स एव आचार्यः। यः आजीविकानिमित्तं वेदस्य एकमेव भागम् अथवा वेदाङ्गानि अध्यापयेत् स उपाध्यायः –एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।/योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥यो विधिपूर्वक गर्भाधानादिसंस्कारम् अपि च भरणपोषणं करोति स गुरुः। आचार्यः उपाध्यायापेक्षया दशगुणं, पिता शतगुणं, माता च सहस्रगुणाधिकं पूजनीया भवति। आचार्यः पितृवत् भवति यतोऽहि स उपनयनसंस्कारं करोति। इमं संस्कारं विना बालकः कोऽपि श्रौतं स्मार्तं वा कर्म कर्तुं न शक्नोति।

**आचार्यकर्तव्यानि**–आचार्यस्य कर्तव्यमस्ति यत् स शिष्यान् आलस्यं विहाय पाठयेत्। आलस्यो हि मनुष्यस्य महान् रिपुः। वेदाध्ययनस्य प्रारम्भः अन्तश्च 'ओउम्' अनेन कुर्यात्। "छात्रैः मातापित्रो, गुरूणां च दोषान्वेषणं विहाय तेषां गुणा एव द्रष्टव्याः ग्रहीतव्याश्च यः विद्यार्थी शिक्षायाः उचितपात्रं न भवेत् तस्मै विद्या न दातव्या "कुपात्रे विद्याया बीजारोपणं न कर्तव्यम्। एका जनश्रुतिः वर्तते यत् वेदविद्या स्वयं ब्राह्मणस्य पार्वे आगत्य आह यत्–विद्या ब्राह्मणमत्याह शेवधिस्तेऽस्मि रक्ष माम्।/असूयकाय मां मादास्तथा स्यां वीर्यवत्तमा॥ /यमेव तु शुचिं विद्यात्रियतं ब्रह्मचारिणम्। /तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ अर्थात् त्वं कुपात्राय विद्यां न देहि इत्थं विद्यादेवी गुरोः पार्श्वे गत्वा निवेदयति। सर्वप्रथम गुरुमुखात् वेदपाठं श्रुत्वा एव स्वाध्यायः करणीयः। यः गुरुराज्ञया विना वेदपाठं करोति स चोरवत् भवति नरकं च याति। 18 गुरोः कर्तव्यमस्ति यत् स मधुरवचसा हितैषिवचोभिश्च छात्रान् अवबोधयेत्। कारणं विना छात्राः नाभिक्रुध्या न दण्ड्याश्च गुरुः उपनयनसस्कारानन्तरं नित्य–नैमित्तिक निषिद्धकर्मविषये छात्रान् ध्यानपूर्वकम् अवबोध्य क्रमशः वेदं पाठयेत्। नित्यकर्मरूपेण प्रतिदिनं स्नात्वा पवित्रो भूत्वा ब्राह्मणस्य देवतायाः, ऋषः पितृणाञ्च तर्पणं कुर्यात्। विशिष्टप्रयोजनहेतु यत् कर्म तत् नैमित्तिकम् यथा– 'पुत्रेष्टियज्ञः' इत्यादि।

**छात्राय निषिद्धकर्म**–निषिद्धकर्मविषये आचार्यमनुना प्रोक्तं यत् छात्रः मधु, मांस, सुगन्धितद्रव्याणि पुष्पाणि, स्त्रीस्पर्शादिकर्म ब्रह्मचर्याश्रमे वर्जयेत् –वर्जयेन्मधु मांसं च गन्धं माल्यं रसास्त्रियः।/ शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥ 2॥ आचार्यमनुः अन्यान्यपि निषिद्धकर्माणि विस्तृत प्रतिपादितवान्। तत्र अभ्यम् अञ्जनधारणं, पादरक्षा, छत्रधारणं, काम–क्रोध–लोभ–मोहादयो ब्रह्माचारिणां कृते वर्जिताः सन्ति।

**सदाचारः** –विद्याध्ययनमेव छात्राणां मुख्यं कर्तव्यमस्ति परं शरीरस्य, मस्तिष्कस्य, मनस, आत्मश् विकासः अपि अनिवार्यः। एषां मध्ये एकस्याप्यविकासो न समुचितः यतो वास्तविक विद्याध्ययनं तु एषां विकासनैव जायते। व्यवहारविषये आचार्यमनुना प्रोक्तं यत् आर्ते सति कदापि अग्रजैः सह दुर्व्यवहार न कुर्युः। यतोऽहि आचार्यः साक्षात् ब्रह्मणो मूर्तिः, पिता प्रजापते, माता पृथिव्याः, अग्रजश्च आत्मनः मूर्तिर्भवतिआचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।/ माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः ॥25 इन्द्रियाणां निग्रहणमेव छात्रस्य कर्तव्यम्। इन्द्रियैः पराजिताः छात्राः कदापि साफल्यं नाधिगच्छन्ति। ये छात्राः विषयासक्ताः भवन्ति, ते वेदाध्ययन–त्याग–यज्ञ–तपसां कदापि लाभं न प्राप्नुवन्ति। ब्रह्मचर्याश्रमे अस्माकं जीवनं साधारणं तपोमयं च भवेत्। छात्राः तन्द्राधीनाः सन्तः स्वकीयम् अमूल्यं समयं वृथा व्यापयन्ति। इत्थं ते स्वलक्ष्यं प्राप्तुं न प्रभवन्ति। तपश्चरणमेव विद्यार्थिजीवनस्य मूलमन्त्रम्। विश्वस्य अनेकेषां महापुरुषाणां विद्यार्थिजीवनं तपश्चरणस्य निदर्शनम्। शिष्यः सर्वप्रथमं योग्यगुरोः अभिवादनं कुर्यात् यः ब्रह्मज्ञानी, लौकिकवैदिकशास्त्राणां ज्ञाता स्यात्। यदि कोऽपि श्रेष्ठः अग्रजश्च आ विराजमानोऽस्ति तर्हि तस्य समकक्षं न उपविशेत्। यदि छात्रः पूर्वमेव उपविष्टः अस्ति तर्हि उत्थाय श्रष्ठान् प्रणमतु।" अभिवादनात् परम् असौ 'अमुकनामाहम् अस्मि' एवं वदेत् " मातुलः, पितृव्यः, श्वसुर ऋत्विक अपि च विद्यायां य श्रेष्ठ, तानपि उत्थाय प्रणम्य च 'अमुकनामाऽस्मि' इति वदेत्। गुरुवत् गुरुमाता अपि पूजनीया समादरणीया च भवेत्।।

**शिष्यकर्तव्यम्**– आचार्यमनुना प्रोक्तं यत् यः नित्यं स्वज्येष्ठान श्रेष्ठांश्च प्रणमति तस्य बले, आयुषि, यशसि विद्यायाञ्च च वृद्धिर्भवति। मानवजीवनेऽस्मिन् गुरुतमं सौख्यं छात्रजीवने एवं लभ्यते। चिन्ताराक्षसी भीता इव जीवनेऽस्मिन् न प्रविशति हर्षोल्लासितानां छात्राणां कूर्दमानं समूहं दृष्ट्वा कस्य चित्तं न स्पृह्यते छात्रजीवनाय तथापि छात्राणां बहूनि कर्तव्यानि सन्ति। यतोऽहि छात्रजीवनमेव आगामिजीवनस्य मूलम्। ब्रह्मचारी संयमेन इन्द्रियाणि वशीकृत्य गुरुणा प्रोक्तान नियमान् निष्ठापूर्वकं पालयेत्।" शिष्यस्य कर्तव्यमस्ति यत् गुरोः नित्यकर्मणः आवश्यक वस्तूनि संगृह्य तस्मै दद्यात्। यथा– कुशा, पुष्पाणि इत्यादीनि। "गुरुणा आज्ञा प्रदत्ता न वा, परञ्च छात्रस्य कर्तव्यमस्ति यत् स अध्ययनं कुर्यात् अपि च आचार्यहितार्थाय प्रयत्न कुर्यात्।" यः गुरुनिन्दां करोति स साक्षात् श्ववत् भवति–परिवादात्खरो भवति श्वा वै भवति निन्दकः।/परिभोक्ता कृतिर्भवति कीटो भवति मत्सरी ॥यथा खनित्रेण पौनः पुण्येन खननात् जलप्राप्तिर्भवति, तथैव निरन्तरं गुरुशुश्रूषया

विद्याप्राप्तिर्भवति –यथा खनन्खनित्रेण नरो वार्यधिगच्छति।/तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति।।

गुरुभक्तिस्तु छात्रजीवनस्य अनिवार्यमङ्गम् गुरुभक्ति विना न कोऽपि छात्रो विद्योपार्जनं कर्तुं क्षम अर्जितापि तस्य विद्या साफल्यं न लभते मितव्ययिता अपि छात्राणाम् अन्यद् गुरुतरं कर्तव्यमस्ति। बहवोऽभिभावकाः प्रेमाभिभूताः सन्ततीनामुच्चशिक्षाणार्थं स्वकीयं सर्वस्वं व्ययीकर्तुं सदैव सन्नद्धाः दृश्यन्ते। परं छात्राः तेषां धनानि निरङ्कुशतया व्ययन्ति नान्यः कश्चिद् गुरुतरो दुर्गुणोऽस्मात्। वर्तमाने विश्वस्मिन् या अन्यशिक्षणपद्धतयः सन्ति तासु ब्रह्मचर्यस्य, आचारस्य, अध्यात्मस्वरूपस्य, सच्चरित्रस्य, मानवनिर्माणस्य, छात्राणां सर्वाङ्गीणविकासस्य कृते च प्रयत्नो न विधीयते। एकमात्रं गुरुकुलीयशिक्षापद्धतावेव विद्यायाः धर्मात्मताया सभ्यतायाः, जितेन्द्रियतायाश्च शिक्षा प्रदीयते। अस्माकं भारतवर्षे लार्डमैकालेप्रदर्शिता आधुनिकी शिक्षापद्धतिरस्ति। सा तु केवलं कथं धनार्जनं कर्तुं शक्यते इति शिक्षयति। तत्र आचारस्य व्यवहारस्याध्यात्मस्वरूपस्य तु नामान्यपि न संश्रूयन्ते। लार्डमैकालेप्रदर्शिता ये विद्यालयाः सन्ति तेषु छात्रैः गुरवः नाद्रीयन्ते ते कक्षासु नियतं न आयान्ति, राजनीतिमाश्रित्य परस्परं विवदन्ते।लार्डमैकाले प्रदर्शितामाधुनिक शिक्षां लब्धवन्तः स्वपितरम्, स्वसारम्, भ्रातरमन्यसम्बन्धिनं च न सम्मानयन्ति। एतादृशीं कुमार्गगामिनीं शिक्षा प्राप्य कदापि ब्रह्मचर्यं न धारयन्ति। सत्वरमेव कामवासनायां निपत्य स्वजीवनहानिं कुर्वन्ति। स्वावलम्बनं तु अवलोक्यत एव न ते वपुषा तु भारतीयाः दृश्यन्ते परन्तु मनसा, वाचा कर्मणा तुः पाश्चात्त्य सभ्यतायाः परिपालकाः पोषकाश्च सन्ति।

स्वदेशस्य अभ्युत्थानाय, समाजोद्धाराय च आत्मानं योग्यं कर्तुं छात्रैः अध्ययने, स्वास्थ्यरक्षणे, चरित्रनिर्माणे च महान् यत्नो विधातव्यः। दुराचारिपुरुषाणां सङ्गात् दूषितग्रन्थानाम् अध्ययनात्, दुराचारवर्धकानां सदाचारविरोधिनां विलासितापोषकाणां चित्रपटादीनां दर्शनात् अश्लीलनृत्यगीताच्च भयङ्करसर्पविषादिव भंतव्यं विद्यार्थिभिः। गुरुकुलशिक्षापद्धत्यां शिक्षितो ब्रह्मचारी कदाऽपि हतोत्साही न भवति। स केवलमुदरपूर्त्यर्थं न पठति अपितु सर्वजनहिताय, सर्वजनशिवाय, सर्वजनक्लेशहरणाय, सर्वदोषहानाय, स्वान्तः सुखायच विद्याम् अर्जयति। स स्वयमपि कृतकृत्यो भवति अन्येषामपि जीवने गुणानां स्थापनाय प्रयत्नवान् भवति। तदत्र शोधलेखेऽस्मिन् संक्षिप्तेन प्रस्तुतम्।

## 11.महाभारते शान्तिपर्वणि धर्मचिन्तनम्

*–टी.एस. श्रीशैलम*

संस्कृत, सहायक प्रोफेसर

श्री शंकर आर्ट्स एंड साइंस कॉलेज एनाथुर, कांचीपुरम तमिलनाडु


ननु "वेदोऽखिलो धर्ममूलम्" इति मनुस्मृतिवचनात् वेदविहितकर्मणः धर्मस्वरूपत्वात् वेदस्यैव धर्मस्वरूपत्वाच्च वेदोक्तकर्मणः एव धर्मत्वं सिद्ध्यति। तस्य च तद्व्यतिरिक्तस्य कस्यापि अन्यस्य धर्मस्वरूपभिन्नता सिद्ध्यतीति चेन्न। वेदस्य समग्रस्यापि धर्मस्वरूपता अस्तीति सत्यं, किन्तु तस्य वर्गविशेषैरेव अनुष्ठीयमानत्वात्, न सर्वजनसुलभता तत्रेति विचिन्तयन् वेदव्यासकर्ता भगवान् वेदव्यासः सर्वजनहिताय महाभारतं पुराणानि च विरचयामास। तत्र वेदविहितकर्मानुकूलकर्मानुष्ठानस्य सत्वात् वेदप्रतिषिद्धकर्मणः अभावात् समग्रमपि महाभारतम् पुराणानि च वेदमूलकत्वम् आवहत्येव। अतः तत्र प्रतिपादितः धर्मः अपि वेदमूलक एव। एतन्मनसि निधाय गीताविष्णुसहस्रनामेति खण्डद्वयं व्यतिरिच्य महाभारते धर्मस्वरूपविवेचनाय कश्चन यत्नः मया प्रस्तोष्यमाणप्रबन्धे करिष्यते।।तद्यथा महाभारतस्य उद्योगपर्वणः एकसप्ततितमे श्लोके विदुरमुखात् धर्मस्य स्वरूपम् उक्तम्–न तत्परस्य संदध्यात् प्रतिकूलं यदात्मनः।/ त्रसंग्रहेणैष धर्मः स्यात् कामादन्यः प्रवर्तते।।

यत्किमपि कर्म स्वस्य प्रतिकूलं भवति चेत् तत् अन्यस्यापि प्रतिकूलं स्यादेव इति मनसि निधाय तादृशं कर्म कर्तुम् अन्यस्मै न उपदिशेत्। संक्षेपेण इदमेव धर्मस्य स्वरूपम्। एतद्विपरीतं यत् यत् कामनया प्रेरितं तद् सर्वमपि अधर्मपदेन व्यपदिश्यते इत्येव प्रस्तुतस्य श्लोकस्य भावः। पुनरपि कर्णपर्वणि एकोनसप्ततितमे अध्याये अष्टपञ्चाशत्तमे श्लोके श्रीकृष्णमुखेन व्यासः कथयति–धारणात् धर्ममित्याहुः धर्मो धारयते प्रजाः। यत् स्यात् धारणसंयुक्तं स धर्म इति निश्चयः।। धर्म एव प्रजाः धारयति। धारणहेतुनैव अयं धर्मः उच्यते। अत एव यत् धारणेन प्राणरक्षणाय युक्तम् अस्ति, यत्र कस्यापि जीवस्य हिंसा न भवति स एव धर्मः। अयमेव धर्मशास्त्रस्य सिद्धान्तः।वनपर्वणः त्रयोदशाधिकत्रिशत्तमाध्याये युधिष्ठिरमुखात् भगवान् व्यासः कथयति– तर्कोप्रतिष्ठः श्रुतयो विभिन्नाः नैको ऋषिर्यस्य मतं प्रमाणम्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतो स पन्थाः।। (वनपर्व 313/117)

तर्कस्य स्थितिरेव नास्ति। श्रुतयः भिन्नभिन्नप्रकारेण भवन्ति। एक एव ऋषिः न भवति यत् तस्य वचनम्
एव प्रामाण्येन स्वीक्रियते। धर्मस्य तत्त्वम् अतीव गूढम्। अतः महान्तः पुरुषाः येन मार्गेण गच्छन्ति स एव धर्मस्य स्वरूपम् इति वक्तुं शक्यते। शान्तिपर्वणि भीष्मपितामहः कथयति– प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम्।/यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः।। (शान्तिपर्व–109/10) अत्र प्रभवशब्दः अभ्युदयनिःश्रेयव्यापारः। तेन प्राणिनाम् अभ्युदयाय निःश्रेयसे च धर्मस्य प्रवचनं कृतमस्ति। अतः तेन उद्देश्येन

युक्तं भवति। अर्थात् येन अभ्युदयनिःश्रेयसः सिद्धिः स एव धर्म इति शास्त्रविदाम् आशयः। तत्रैव शान्तिपर्वणि भीष्मः भणति– न धर्मवचनं वाचा नैव वुद्धयेति नः श्रुतम्।/इति बार्हस्पतं ज्ञानं प्रोवाच मधवा स्वयम् ।। (शान्तिपर्व–142/17)

केवलं वचनेन अथवा तर्केण एव धर्मस्य निश्चयः न भवति। अपि तु शास्त्रवचनानुसारेण तर्केण धर्मस्य निर्णयः भवति, इदमेव बृहस्पतेरपि मतं यत् इन्द्रेण दर्शितम् अस्ति। तत्रैव शान्तिपर्वणि युधिष्ठिरः कथयति– एतत्प्रधानं न च कामाकारो यथा नियुक्तोऽस्मि तथा करोमि।/भूतानि सर्वाणि विधिनियुङ्क्ते विधिर्बलीयानिति वित्त सर्वे। । (शान्तिपर्व– 167/47)एकैव क्रिया परिस्थितिवशात् धर्मः अधर्मो वा भवितुमर्हति। तद्यथा शान्तिपर्वणि उक्तं वर्तते । स एव धर्मः सोऽधर्मे देशकाले प्रतिष्ठितः।/आदानमनृतं हिता धर्मोह्यावास्थिकः स्मृतः।। (शान्तिपर्व–36/11) चौर्यम्, मिथ्याभाषणम्, हिंसा चेत्येते अधर्मत्वेन परिगणिताः सन्ति । किन्तु परिस्थितिविशेषे एते धर्मत्वेनापि भवितुं प्रभवन्ति। अतः देशकालभेदेन एकमेव कार्यं धर्मत्वेन अधर्मत्वेन वा भवितुम् अर्हन्ति। तत्रैव पुनः उक्तमासीत्– अपध्यानमलोधर्मः मलोऽर्थस्य निगूहनम्।/ सम्प्रमोदमलः कामो भूयः स्वगुणवर्जितः।। (शान्तिपर्व–123/10)

फलस्य इच्छा धर्मस्य मलः, संगूह्य स्थानम् अर्थस्य मलः, आमोद–प्रमोदः कामस्य मलः। यदि धर्मार्थकामाः स्वीयमलविशुद्धाः भवन्ति तर्हि ते कल्याणकारकाः भवन्ति। तत्रैव पुनरुक्तम्– अद्वैधज्ञः पथि द्वैधे संशयं प्राप्नुमर्हति।/बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत।। (शान्तिपर्व–142/8) एकमेव कर्म कदाचित् धर्मः कदाचित् अधर्म इति गण्यते। कर्मणः द्वयमेव द्विधा स्थितिः वैधत्वेन गण्यते। यः द्विधत्वं न जानाति सः वैधे मार्गे स्थितः संशयापन्नः भवति। बुद्धेः वैधं पुरस्तादेव सुष्ठु अवगन्तव्यम्। पुनरपि उक्तम् तत्रैव– अन्ये कृतयुगेधर्मे धर्माः त्रेतायां द्वापरे परे।/ अन्ये कलियुगे धर्मा यथाशक्ति कृता इव।। (शान्तिपर्व–260/8)कृतयुगे त्रेतायुग द्वापरे कलियुगे च भिन्ना भिन्नाः धर्माः प्रतिपादिताः भवन्ति। पुनः तत्तद्युगीनलोकानां सामर्थ्यं समवेक्ष्येव एतत्कृतवन्तः । ऋषिः विश्वामित्रः तत्रैव पर्वणि कथयति– आपत्सु विहितं स्तैन्यं विशिष्टसमहीनताः।/विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः।। (शान्तिपर्व–141/39) आपत्तिकाले प्राह्मणेन श्रेष्ठस्य सनस्य हितस्य वा गृहात् चौर्यं विधातव्यम् इति शास्त्रविधानम्। किन्तु आदिपर्वणि उग्रश्रवाः कथयति– सम्यक्सद्धर्ममूला वै व्यसते शान्तिरुत्तमा।/अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् ।। (शान्तिपर्व–37/20)

आपत्तिकालेऽपि शान्त्यै स एव उपायः उत्तमः स्वीकृतः भवति। यः सुष्ठु श्रेष्ठधर्मानुकूलं कृतं भवति। उद्योगपर्वणि महात्मा विदुरः धृतराष्ट्रं कथयति यत् दशविधाः जनाः धर्मम् अधर्मम् च अवगन्तुं न प्रभवन्ति। ते यथा– दश धर्मं न जानन्ति धृष्टराष्ट्रनिबोधतान्।/मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभूक्षितः।।/त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।/तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः।। (शान्तिपर्व–33/101–102) शल्यपर्वणि युधिष्ठिरः दुर्योधनं कथयति यत् आपदि एव जनः धर्मशास्त्रं पश्यति न तु स्वस्थसमये । प्रसङ्गेऽस्मिन् उक्तं यथा सर्वो विमृश्यते जन्तुः कृच्छ्रस्थो धर्मदर्शनम्। पदस्थः पिहितं द्वारं परलोकस्य पश्यति (शल्यपर्व–32/59) सौप्तिकपर्वणि कृपाचार्यः अश्वत्थामानं कथयति यत् दुर्भावनया ग्रस्ताय अनियतेन्द्रियाय मेधाविनोऽपि धर्माधर्मौ न ज्ञातौ भवतः–शुश्रुषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः/नालं वेदयितुं कृत्स्नौ धर्माविति मे मतिः।।/तथैव तावन्मेधावी विनयं यो न? शिक्षते/न च किञ्चन जानाति सोऽपि धर्मार्थनिश्चयम्।। (सौप्तिकपर्व –5/1–2)

**उपसंहारः–** एवञ्च वैदिककालादारभ्य एतावत्पर्यन्तं विविधमुनयः कवयश्च धर्मस्य विशिष्टानि लक्षणानि स्वीये स्वीये धर्मशास्त्रग्रन्थे प्रतिपादयामासुः। आचार्यः मनुरपि मनुस्मृतौ विशिष्टधर्मशास्त्रग्रन्थे धर्मस्य लक्षणं प्रोवाच। यदि सूक्ष्मं विचार्यते तर्हि प्राचीनैः महर्षिभिः निरूपितधर्मलक्षणानुसारमेव साम्प्रतिककाले अस्माभिः सर्वैरपि वर्तितव्यम्। येन वयं सर्वे मिलित्वा सुसमीचीनस्य समाजस्य कालान्तरे राष्ट्रस्य वा निर्माणं कर्तुं शक्नुमः।

**उपयुक्त ग्रन्तसूचि–**(1)महाभारत–शान्तिपर्व Published by Gita Press Giorakpur Year 2013. (**2**)Shanti parva of Mahabaharata by Sripad Damopdar Satealekar published by Swadyaya Mandal (Vedic Research Center) Gujarat year 2011. (**3**)The Mahabharata: Shanti Parva. Editor: Dutta, Manmatha Nath Publisher: Elysium Press, Calcutta Year 1908, (**4**)Kisari Mohan Ganguli (Translator), Chapter 267, Shanti Parva The Mahabharata, Published by P.C. Roy Year 1890. (**5**)Ganguli, K.M. (1883-1896) "Shanti Parva" in The Mahabharata of Krishna-Dwaipayana Vyasa (12 Volumes). Calcutta